THE

# DASARŪPAKA

OF

# DHANANJAYA

WITH

The Commentary of Dhanika and Das'arūpa from Bhāratīya Nāṭyas'āstra



EDITED BY

KĀS'INĀTH PĀṆDURANG PARAB

Fifth Edition

REVISED WITH THE APPENDIX BY

NĀRĀYAṆ RĀM ĀCHĀRYA "KĀVYATĪRTH"

PUBLISHED BY

SATYABHĀMĀBĀI PĀṆDURANG,

FOR THE 'NIRṆAYA-SĀGAR' PRESS,

BOMBAY

1941

Price 1 Rupee

॥ श्रीः ॥

श्रीधनंजयविरचितं

# दशरूपकम् ।

धनिककृतयावलोकाख्यया व्याख्यया,

भारतीयनाट्यशास्त्रगतदशरूपनिरूपणेन च समेतम् ।

काशीनाथ पाण्डुरङ्ग परब इत्यनेन

पूर्वसंस्कृतस्यास्य

पञ्चमं संस्करणं

श्रीमदिन्दिराकान्तचरणान्तेवासिना

नारायण राम आचार्य "काव्यतीर्थ" इत्यनेन

परिशिष्टेन समलङ्कृत्य संशोधितम् ।

तच्च

मुम्बय्यां

सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः

निर्णयसागराख्यमुद्रणयन्त्रालयकृते तत्रैव

मुद्रयित्वा प्रकाशितम् ।

शाकः १८६३, सन १९४१.

मूल्यं १ रूप्यकम् ।

# दशरूपकविषयानुक्रमणिका ।



# टीकोद्धृतग्रन्थस्थलनिर्देशार्थमवलम्बितग्रन्थानां संस्करणादिसूचिः ॥

| ग्रन्थः | संस्करणाङ्कः | निर्णयसागरीयः |
|---|---|---|
| उत्तररामचरितम् | ९ | ,, |
| किरातम् | १३ | ,, |
| अमरुशतकम् | २ | ,, |
| कादम्बरी | ८ | ,, |
| कुमारसंभवम् | १२ | ,, |
| गाथासप्तशती | ३ | ,, |
| भर्तृहरिशतकम् | ७ | ,, |
| मालतीमाधवम् | ५ | ,, |
| मुद्राराक्षसम् | ८ | ,, |
| मृच्छकटिका | ७ | ,, |
| मेघदूतम् | १४ | ,, |
| रघुः | ४ | ,, |
| रत्नावली | ४ | ,, |
| रामायणम् | ४ | ,, |
| वीरचरितम् | ४ | ,, |
| वेणीसंहारम् | ६ | ,, |
| शाकुन्तलम् | १० | ,, |
| नागानन्दम् | २ | चौखंबा० |
| हनूमन्नाटकम् | १ | वेङ्कटेशमुद्र० |



॥ श्रीः ॥

श्रीधनंजयविरचितं

# दशरूपकम् ।

## धनिककृतयावलोकाख्यया व्याख्यया समेतम् ।



### प्रथमः प्रकाशः ।

इह सदाचारं प्रमाणयद्भिरविघ्नेन प्रकरणस्य समाप्त्यर्थसिद्ध्योः प्रकृताभिमतदेवतयोर्नमस्कारः क्रियते श्लोकद्वयेन—

**नमस्तस्मै गणेशाय यत्कण्ठः पुष्करायते ।**
**मदाभोगघनध्वानो नीलकण्ठस्य ताण्डवे ॥ १ ॥**

यस्य कण्ठः पुष्करायते मृदङ्गवदाचरति । मदाभोगेन घनध्वानो निबिडध्वनिः । नीलकण्ठस्य शिवस्य ताण्डव उद्धते नृत्ते । तस्मै गणेशाय नमः । अत्र खण्डश्लेषाक्षिप्यमाणोपमाच्छायालंकारः । नीलकण्ठस्य मयूरस्य ताण्डवे यथा मेघध्वनिः पुष्करायत इति प्रतीतेः ॥

**दशरूपानुकारेण यस्य माद्यन्ति भावकाः ।**
**नमः सर्वविदे तस्मै विष्णवे भरताय च ॥ २ ॥**

एकत्र मत्स्यकूर्मादिप्रतिमानामुद्देशेन, अन्यत्रानुकृतिरूपनाटकादिना यस्य भावका ध्यातारो रसिकाश्च माद्यन्ति हृष्यन्ति तस्मै विष्णवेऽभिमताय प्रकृताय भरताय च नमः ॥

श्रोतुः प्रवृत्तिनिमित्तं प्रदर्श्यते—

**कस्यचिदेव कदाचिद्दयया विषयं सरस्वती विदुषः ।**
**घटयति कमपि तमन्यो व्रजति जनो येन वैदग्धीम् ॥ ३ ॥**

तं कंचिद्विषयं प्रकरणादिरूपं कदाचिदेव कस्यचिदेव कवेः सरस्वती योजयति । येन प्रकरणादिना विषयेणान्यो जनो विदग्धो भवति ॥

स्वप्रवृत्तिविषयं दर्शयति—

**उद्धृत्योद्धृत्य सारं यमखिलनिगमान्नाट्यवेदं विरिञ्चि-**
**श्चक्रे यस्य प्रयोगं मुनिरपि भरतस्ताण्डवं नीलकण्ठः ।**
**शर्वाणी लास्यमस्य प्रतिपदमपरं लक्ष्म कः कर्तुमीष्टे**
**नाट्यानां किंतु किंचित्प्रगुणरचनया लक्षणं संक्षिपामि॥४॥**

यं नाट्यवेदं वेदेभ्यः सारमादाय ब्रह्मा कृतवान्, यत्संबद्धमभिनयं भरतश्चकार करणाङ्गहारानकरोत्, हरस्ताण्डवमुद्धतं नृत्तं कृतवान्, लास्यं सुकुमारं नृत्तं

पार्वती कृतवती, तस्य सामस्त्येन लक्षणं कर्तुं कः शक्तः । तदेकदेशस्य तु दशरूपस्य संक्षेपः क्रियत इत्यर्थः ॥

विषयैक्यप्रसक्तं पौनरुक्त्यं परिहरति—

**व्याकीर्णे मन्दबुद्धीनां जायते मतिविभ्रमः ।**
**तस्यार्थस्तत्पदैस्तेन संक्षिप्य क्रियतेऽञ्जसा ॥ ५ ॥**

व्याकीर्णे विक्षिप्ते विस्तीर्णे च रसशास्त्रे मन्दबुद्धीनां पुंसां मतिमोहो भवति, तेन तस्य नाट्यवेदस्यार्थस्तत्पदैरेव संक्षिप्य ऋजुवृत्त्या क्रियत इति ॥

इदं प्रकरणं दशरूपज्ञानफलम् । दशरूपं किंफलमित्याह—

**आनन्दनिस्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः ।**
**योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादुपराङ्मुखाय ॥६॥**

तत्र केचित् 'धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥' (भामहः) इत्यादिना त्रिवर्गादिव्युत्पत्तिं काव्यफलत्वेनेच्छन्ति तन्निरासेन स्वसंवेद्यः परमानन्दरूपो रसास्वादो दशरूपाणां फलम्, न पुनरितिहासादिवत्त्रिवर्गादिव्युत्पत्तिमात्रमिति दर्शितम् । नम इति सोल्लुण्ठम् ॥

'नाट्यानां लक्षणं संक्षिपामि' (१।४) इत्युक्तम्, किं पुनस्तन्नाट्यमित्याह—

**अवस्थानुकृतिर्नाट्यं**

काव्योपनिबद्धधीरोदात्ताद्यवस्थानुकारश्चतुर्विधाभिनयेन तादात्म्यापत्तिर्नाट्यम् ॥

**रूपं दृश्यतयोच्यते ।**

तदेव नाट्यं दृश्यमानतया रूपमित्युच्यते, नीलादिरूपवत् ॥

**रूपकं तत्समारोपाद्**

नटे रामाद्यवस्थारोपेण वर्तमानत्वाद्रूपकम् । मुखचन्द्रादिवदित्येकस्मिन्नर्थे प्रवर्तमानस्य शब्दत्रयस्य 'इन्द्रः पुरन्दरः शक्रः' इतिवत्प्रवृत्तिनिमित्तभेदो दर्शितः ॥

**दशधैव रसाश्रयम् ॥ ७ ॥**

रसानाश्रित्य वर्तमानं दशप्रकारकम् । एवेत्यवधारणं शुद्धाभिप्रायेण, नाटिकायाः संकीर्णत्वेन वक्ष्यमाणत्वात् ॥

तानेव दशभेदानुद्दिशति—

**नाटकं सप्रकरणं भाणः प्रहसनं डिमः ।**
**व्यायोगसमवकारौ वीथ्यङ्केहामृगा इति ॥ ८ ॥**

ननु, 'डोम्बी श्रीगदितं भाणो भाणीप्रस्थानरासकाः । काव्यं च सप्त नृत्यस्य भेदाः स्युस्तेऽपि भाणवत् ॥' इति रूपकान्तराणामपि भावादवधारणानुपपत्तिरित्याशङ्क्याह—

**अन्यद्भावाश्रयं नृत्यं**

रसाश्रयान्नाट्याद्भावाश्रयं नृत्यमन्यदेव । तत्र भावाश्रयमिति विषयभेदान्नृत्यमिति नृतेर्गात्रविक्षेपार्थत्वेनाङ्गिकबाहुल्यात्तत्कारिषु च नर्तकव्यपदेशाल्लोकेऽपि चात्र प्रेक्षणीयकमिति व्यवहारान्नाटकादेरन्यन्नृत्यम् । तद्भेदत्वाच्छ्रीगदितादेरवधारणोपपत्तिः । नाटकादि च रसविषयम् । रसस्य च पदार्थीभूतविभावादिकसंसर्गात्मकवाक्यार्थहेतुकत्वाद्वाक्यार्थाभिनयात्मकत्वं रसाश्रयमित्यनेन दर्शितम् । नाट्यमिति च 'नट अवस्पन्दने' इति नटेः किंचिच्चलनार्थत्वात्सात्त्विकबाहुल्यम् । अत एव तत्कारिषु नटव्यपदेशः । यथा च गात्रविक्षेपार्थत्वे समानेऽप्यनुकारात्मकत्वेन नृत्तादन्यन्नृत्यं तथा वाक्यार्थाभिनयात्मकान्नाट्यात्पदार्थाभिनयात्मकमन्यदेव नृत्यमिति ॥

प्रसङ्गान्नृत्तं व्युत्पादयति—

**नृत्तं ताललयाश्रयम् ।**

तालः=चच्चत्पुटादिः, लयः=द्रुतादिः, तन्मात्रापेक्षोऽङ्गविक्षेपोऽभिनयशून्यो नृत्तमिति ॥

अनन्तरोक्तं द्वितयं व्याचष्टे—

**आद्यं पदार्थाभिनयो मार्गो देशी तथा परम् ॥ ९ ॥**

नृत्यं पदार्थाभिनयात्मकं मार्ग इति प्रसिद्धम् । नृत्तं च देशीति ॥

द्विविधस्यापि द्वैविध्यं दर्शयति—

**मधुरोद्धतभेदेन तद्द्वयं द्विविधं पुनः ।**
**लास्यताण्डवरूपेण नाटकाद्युपकारकम् ॥ १० ॥**

सुकुमारं द्वयमपि लास्यम्, उद्धतं द्वितयमपि ताण्डवमिति । प्रसङ्गोक्तस्योपयोगं दर्शयति—तच्च नाटकाद्युपकारकमिति । नृत्यस्य क्वचिदवान्तरपदार्थाभिनयेन नृत्तस्य च शोभाहेतुत्वेन नाटकादावुपयोग इति ॥

अनुकारात्मकत्वेन रूपाणामभेदात्किंकृतो भेद इत्याशङ्क्याह—

**वस्तु नेता रसस्तेषां भेदको**

वस्तुभेदान्नायकभेदाद्रसभेदाद्रूपाणामन्योन्यं भेद इति ॥

वस्तुभेदमाह—

**वस्तु च द्विधा ।**

कथमित्याह—

**तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः ॥ ११ ॥**

प्रधानभूतमाधिकारिकम् । यथा रामायणे रामसीतावृत्तान्तः । तदङ्गभूतं प्रासङ्गिकम् । यथा तत्रैव विभीषणसुग्रीवादिवृत्तान्त इति ॥

निरुक्त्याधिकारिकं लक्षयति—

**अधिकारः फलस्वाम्यमधिकारी च तत्प्रभुः ।**
**तन्निर्वर्त्यमभिव्यापि वृत्तं स्यादाधिकारिकम् ॥ १२ ॥**

फलेन स्वस्वामिसंबन्धोऽधिकारः, फलस्वामी चाधिकारी, तेनाधिकारेणाधिकारिणा वा निर्वृत्तं फलपर्यन्ततां नीयमानमितिवृत्तमाधिकारिकम् ॥

प्रासङ्गिकं व्याचष्टे—

**प्रासङ्गिकं परार्थस्य स्वार्थो यस्य प्रसङ्गतः ।**

यस्येतिवृत्तस्य परप्रयोजनस्य सतस्तत्प्रसङ्गात्स्वप्रयोजनसिद्धिस्तत्प्रासङ्गिकमितिवृत्तं प्रसङ्गनिर्वृत्तेः ॥

प्रासङ्गिकमपि **पताका-प्रकरी**भेदाद्द्विविधमित्याह—

**सानुबन्धं पताकाख्यं प्रकरी च प्रदेशभाक् ॥ १३ ॥**

दूरं यदनुवर्तते प्रासङ्गिकं सा पताका, सुग्रीवादिवृत्तान्तवत् । पताकेवासाधारणनायकचिह्नवत्तदुपकारित्वात् । यदल्पं सा प्रकरी, श्रावणादिवृत्तान्तवत् ॥

पताकाप्रसङ्गेन **पताकास्थानकं** व्युत्पादयति—

**प्रस्तुतागन्तुभावस्य वस्तुतोऽन्योक्तिसूचकम् ।**
**पताकास्थानकं तुल्यसंविधानविशेषणम् ॥ १४ ॥**

प्राकरणिकस्य भाविनोऽर्थस्य सूचकं रूपं पताकावद्भवतीति पताकास्थानकम् । तच्च तुल्येतिवृत्ततया तुल्यविशेषणतया च द्विप्रकारम्,—अन्योक्तिसमासोक्तिभेदात् । यथा रत्नावल्याम् ( ३।६ )—

'यातोऽस्मि पद्मनयने समयो ममैष सुप्ता मयैव भवती प्रतिबोधनीया ।
प्रत्यायनामयमितीव सरोरुहिण्याः सूर्योऽस्तमस्तकनिविष्टकरः करोति ॥'

यथा च तुल्यविशेषणतया,—

'उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥' ( रत्ना० २।४ )

एवमाधिकारिकद्विविधप्रासङ्गिकभेदात्त्रिविधस्यापि त्रैविध्यमाह—

**प्रख्यातोत्पाद्यमिश्रत्वभेदात्त्रेधापि तत्त्रिधा ।**
**प्रख्यातमितिहासादेरुत्पाद्यं कविकल्पितम् ॥ १५ ॥**
**मिश्रं च संकरात्ताभ्यां दिव्यमर्त्यादिभेदतः ।**

इति निगदव्याख्यातम् ॥

---

१ 'अतिव्यापि' इति पाठः. २ 'अविरतैः' इति पाठः । ३ 'नान्तो', 'त्रेधा' इति पाठौ.

तस्येतिवृत्तस्य किं फलमित्याह—

**कार्यं त्रिवर्गस्तच्छुद्धमेकानेकानुबन्धि च ॥ १६ ॥**

धर्मार्थकामाः फलम् । तच्च शुद्धमेकैकमेकानुबन्धं द्वित्र्यनुबन्धं वा ॥

तत्साधनं व्युत्पादयति—

**स्वल्पोद्दिष्टस्तु तद्धेतुर्बीजं विस्तार्यनेकधा ।**

स्तोकोद्दिष्टः कार्यसाधकः पुरस्तादनेकप्रकारं विस्तारी हेतुविशेषो बीजवद्बीजम् । यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुरनुकूलदैवो यौगंधरायणव्यापारो विष्कम्भके न्यस्तः—**यौगंधरायणः**—कः संदेहः । ( 'द्वीपादन्यस्माद्' ( १।६ ) इति पठति । )' इत्यादिना 'प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ' ( १।७ ) इत्यन्तेन ।

यथा च वेणीसंहारे द्रौपदीकेशसंयमनहेतुर्भीमक्रोधोपचितयुधिष्ठिरोत्साहो बीजमिति । तच्च महाकार्यावान्तरकार्यहेतुभेदादनेकप्रकारमिति ॥

अवान्तरबीजस्य संज्ञान्तरमाह—

**अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणम् ॥ १७ ॥**

यथा रत्नावल्यामवान्तरप्रयोजनानङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सत्यनन्तरकार्यहेतुः—'उदयनस्येन्दोरिवोद्वीक्षते । **सागरिका**—( श्रुत्वा । ) कहं एसो सो उदयणणरिंदो जस्स अहं तादेण दिण्णा ।'[1] ( रत्ना० १।२३ ) इत्यादि । बिन्दुर्जले तैलबिन्दुवत्प्रसारित्वात् ॥

इदानीं पताकाद्यं प्रसङ्गाद्व्युत्क्रमोक्तं क्रमार्थमुपसंहरन्नाह—

**बीजबिन्दुपताकाख्यप्रकरीकार्यलक्षणाः ।**
**अर्थप्रकृतयः पञ्च ता एताः परिकीर्तिताः ॥ १८ ॥**

अर्थप्रकृतयः=प्रयोजनसिद्धिहेतवः ॥

अन्यदवस्थापञ्चकमाह—

**अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः ।**
**आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः ॥ १९ ॥**

यथोद्देशं लक्षणमाह—

**औत्सुक्यमात्रमारम्भः फललाभाय भूयसे ।**

'इदमहं संपादयामि' इत्यध्यवसायमात्रमारम्भ इत्युच्यते । यथा रत्नावल्याम् ( १।७ )—'प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे[2] चेत्थं दत्तहस्तावलम्बे ।' इत्यादिना सचिवायत्तसिद्धेर्वत्सराजस्य कार्यारम्भो यौगंधरायणमुखेन दर्शितः ॥

अथ प्रयत्नः—

**प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वितः ॥ २० ॥**

तस्य फलस्याप्राप्तावुपाययोजनादिरूपश्चेष्टाविशेषः प्रयत्नः । यथा रत्नावल्यामालेख्याभिलेखनादिर्वत्सराजसमागमोपायः—'[3]तहावि णत्थि अण्णो दंसणु-

१ 'कथमेष स उदयननरेन्द्रो यस्याहं तातेन दत्ता ।' इति च्छाया. २ 'दैवेनेत्थं' इति पाठः । ३ 'तथापि नास्त्यन्यो दर्शनोपाय इति यथातथालिख्य यथा समीहितं करिष्यामि ।' इति च्छाया.

वाओ त्ति जहा तहा आलिहिअ जधासमीहिअं करिस्सं ।' (रत्ना० पृ० ५४) इत्यादिना प्रतिपादितः ॥

**प्राप्त्याशा**माह—

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसंभवः ।**

उपायस्यापायशङ्कायाश्च भावादनिर्धारितैकान्ता फलप्राप्तिः प्राप्त्याशा । यथा रत्नावल्यां तृतीयेऽङ्के (पृ० १४४) वेषपरिवर्ताभिसरणादौ समागमोपाये सति वासवदत्तालक्षणापायशङ्कायाः—'एवं[1] जदि अआलवादाली विअ आअच्छिअ अण्णदो ण णइस्सदि वासवदत्ता ।' इत्यादिना दर्शितत्वादनिर्धारितैकान्ता समागमप्राप्तिरुक्ता ॥

**नियताप्ति**माह—

**अपायाभावतः प्राप्तिर्नियताप्तिः सुनिश्चिता ॥ २१ ॥**

अपायाभावादवधारितैकान्ता फलप्राप्तिर्नियताप्तिरिति । यथा रत्नावल्याम्— '**विदूषकः**—सागरिका[2] दुक्करं जीविस्सदि ।' (पृ० १३८) इत्युपक्रम्य,—'किं[3] ण उपायं चिंतेसि ।' (पृ० १३९) इत्यनन्तरम्,—'**राजा**—वयस्य, देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि ।' (पृ० १३९) इत्यनन्तराङ्कार्थबिन्दुनानेन देवीलक्षणापायस्य प्रसादनेन निवारणान्नियता फलप्राप्तिः सूचिता ॥

**फलयोग**माह—

**समग्रफलसंपत्तिः फलयोगो यथोदितः ।**

यथा रत्नावल्यां रत्नावलीलाभचक्रवर्तित्वावाप्तिरिति ॥

**संधिलक्षण**माह—

**अर्थप्रकृतयः पञ्च पञ्चावस्थासमन्विताः ॥ २२ ॥**
**यथासंख्येन जायन्ते मुखाद्याः पञ्च संधयः ।**

अर्थप्रकृतीनां पञ्चानां यथासंख्येनावस्थाभिः पञ्चभिर्योगाद्यथासंख्येनैव वक्ष्यमाणा मुखाद्याः पञ्च संधयो जायन्ते ॥

**संधिसामान्यलक्षण**माह—

**अन्तरैकार्थसंबन्धः संधिरेकान्वये सति ॥ २३ ॥**

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसंबन्धः संधिः ॥

के पुनस्ते **संधयः**—

**मुखप्रतिमुखे गर्भः सावमर्शोपसंहृतिः ।**

यथोद्देशं लक्षणमाह—

**मुखं बीजसमुत्पत्तिर्नानार्थरससंभवा[4] ॥ २४ ॥**
**अङ्गानि द्वादशैतस्य बीजारम्भसमन्वयात् ।**

---

१ 'एवं यदि अकालवातालीवागत्यान्यतो न नेष्यति वासवदत्ता ।' इति च्छाया. २ 'सागरिका दुष्करं जीविष्यति ।' इति च्छाया. ३ 'किं नोपायं चिन्तयसि ।' इति च्छाया. ४ 'संश्रया' इति पाठः.

बीजानामुत्पत्तिरनेकप्रकारप्रयोजनस्य रसस्य च हेतुर्मुखसंधिरिति व्याख्येयम् । तेनात्रिवर्गफले प्रहसनादौ रसोत्पत्तिहेतोरेव बीजत्वमिति । अस्य च बीजारम्भार्थयुक्तानि द्वादशाङ्गानि भवन्ति ॥

तान्याह—

**उपक्षेपः परिकरः परिन्यासो विलोभनम् ॥ २५ ॥**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ।**
**उद्भेदभेदकरणान्यन्वर्थान्यथ लक्षणम् ॥ २६ ॥**

एतेषां स्वसंज्ञाव्याख्यातानामपि सुखार्थं लक्षणं क्रियते—

**बीजन्यास उपक्षेपः**

यथा रत्नावल्याम् ( १।६ )—'( नेपथ्ये । )

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥'

इत्यादिना यौगंधरायणो वत्सराजस्य रत्नावलीप्राप्तिहेतुभूतमनुकूलदैवं स्वव्यापारं बीजत्वेनोपक्षिप्तवानित्युपक्षेपः ॥

**परिकर**माह—

**तद्बाहुल्यं परिक्रिया ।**

यथा तत्रैव—'अन्यथा क्व सिद्धादेशप्रत्ययप्रार्थितायाः सिंहलेश्वरदुहितुः समुद्रे प्रवहणभङ्गमग्नोत्थितायाः फलकासादनम् ।' ( रत्ना० पृ० १३ ) इत्यादिना 'सर्वथा स्पृशन्ति स्वामिनमभ्युदयाः' इत्यन्तेन बीजोत्पत्तेरेव बहुकरणात्परिकरः ॥

**परिन्यास**माह—

**तन्निष्पत्तिः परिन्यासो**

यथा तत्रैव ( रत्ना० १।७ )—

'प्रारम्भेऽस्मिन्स्वामिनो वृद्धिहेतौ दैवे चेत्थं दत्तहस्तावलम्बे ।
सिद्धेर्भ्रान्तिर्नास्ति सत्यं तथापि स्वेच्छाकारी भीत एवास्मि भर्तुः ॥'

इत्यनेन यौगंधरायणः स्वव्यापारदैवयोर्निष्पत्तिमुक्तवानिति परिन्यासः ॥

**विलोभन**माह—

**गुणाख्यानं[1] विलोभनम् ॥ २७ ॥**

यथा रत्नावल्याम् ( १।२३ )—

'अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायंतने संपतन् ।
संप्रत्येष सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥'

इति वैतालिकमुखेन चन्द्रतुल्यवत्सराजगुणवर्णनया सागरिकायाः समागमहेत्वनुरागबीजानुगुण्येनैव विलोभनाद्विलोभनमिति ॥

---

१ 'गुणाख्यानात्' इति पाठः.

यथा च वेणीसंहारे (१।२२)—

'मन्थायस्तार्णवाम्भःप्लुतकुहरवलन्मन्दरध्वानधीरः
कोणाघातेषु गर्जत्प्रलयघनघटान्योन्यसंघट्टचण्डः।
कृष्णाक्रोधाग्रदूतः कुरुकुलनिधनोत्पातनिर्घातवातः
केनास्मत्सिंहनादप्रतिरसितसखो दुन्दुभिस्ताडितोऽयम्॥'

इत्यादिना 'यशोदुन्दुभिः' (१।२५) इत्यन्तेन द्रौपद्या विलोभनाद्विलोभनमिति॥

अथ युक्तिः—

**संप्रधारणमर्थानां युक्तिः**

यथा रत्नावल्याम् (पृ० १५)—'मयापि चैनां देवीहस्ते सबहुमानं निक्षिपता युक्तमेवानुष्ठितम्। कथितं च मया यथा बाभ्रव्यः कञ्चुकी सिंहलेश्वरामात्येन वसुभूतिना सह कथंकथमपि समुद्रादुत्तीर्य कोशलोच्छित्तये गतस्य रुमण्वतो घटितः।' इत्यनेन सागरिकाया अन्तःपुरस्थाया वत्सराजस्य सुखेन दर्शनादिप्रयोजनावधारणाद्बाभ्रव्यसिंहलेश्वरामात्ययोः स्वनायकसमागमहेतुप्रयोजनत्वेनावधारणाद्युक्तिरिति॥

अथ प्राप्तिः—

**प्राप्तिः सुखागमः।**

यथा वेणीसंहारे (पृ० १९)—'**चेटी**—भट्टिणि, परिकुविदो विअ कुमारो लक्खीअदि[1]।' इत्युपक्रमे,—'**भीमः**—

मथ्नामि कौरवशतं समरे न कोपाद्दुःशासनस्य रुधिरं न पिबाम्युरस्तः।
संचूर्णयामि गदया न सुयोधनोरू संधिं करोतु भवतां नृपतिः पणेन॥ (१।१५)

**द्रौपदी**—(श्रुत्वा सहर्षम्) णाध[2], अस्सुदपुव्वं खु एदं वअणं। ता पुणो पुणो भण।' (वे० सं० १९) इत्यनेन भीमक्रोधबीजान्वयेनैव सुखप्राप्त्या द्रौपद्याः प्राप्तिरिति। यथा च रत्नावल्याम् (पृ० ४६)—'**सागरिका**—(श्रुत्वा सहर्षं परिवृत्य सस्पृहं पश्यन्ती।) कधं[3] अअं सो राआ उदयणो जस्स अहं तादेण दिण्णा। ता परप्पेसण दूसिदं मे जीविदं एदस्स दंसणेण बहुमदं संजादं।' इति सागरिकायाः सुखागमात्प्राप्तिरिति॥

अथ समाधानम्—

**बीजागमः समाधानं**

यथा रत्नावल्याम् (पृ० ३८)—'**वासवदत्ता**—तेर्णं[4] हि उअणेहि मे

---

१ 'भर्त्रि, परिकुपित इव कुमारो लक्ष्यते।' इति च्छाया. २ 'नाथ अश्रुतपूर्वं खल्वेतद्वचनम्। तत्पुनः पुनर्भण।' इति च्छाया. ३ 'कथमयं स राजोदयनो यस्याहं तातेन दत्ता। तत्परप्रेषणदूषितं मे जीवितमेतस्य दर्शनेन बहुमतं संजातम्।' इति च्छाया. ४ 'तेन ह्युपनय मे उपकरणानि।' इति च्छाया.

उवअरणाइं । **सागरिका**—[1]भट्टिणि, एदं सव्वं सज्जं । **वासवदत्ता**—(निरूप्यात्मगतम्।) [2]अहो पमादो परिअणस्स । जस्स एव्व दंसणपहादो पअत्तेण रक्खीअदि तस्स जेव कहं दिट्ठिगोअरं आअदा । भोदु । एव्वं दाव । (प्रकाशम् ।) हञ्जे सागरिए, कीस तुमं अज्ज पराहीणे परिअणे मअणूसवे सारिअं मोत्तूण इहागदा । ता तहिं ज्जेव गच्छ ।' इत्युपक्रमे,—'**सागरिका**—( स्वगतम् । ) [3]सारिआ दाव मए सुसंगदाए हत्थे समप्पिदा । पेक्खिदुं च मे कुतूहलं । ता अलक्खिआ पेक्खिस्सं ।' ( रत्ना० पृ० ३९ ) इत्यनेन वासवदत्ताया रत्नावलीवत्सराजयोर्दर्शनप्रतीकारात्सारिकायाः सुसंगतार्पणेनालक्षितप्रेक्षणेन च वत्सराजसमागमहेतोर्बीजस्योपादानात्समाधानमिति ।

यथा च वेणीसंहारे ( १।२१ )—'**भीमः**—भवतु । पाञ्चालराजतनये, श्रूयतामचिरेणैव कालेन,—

**चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य सुयोधनस्य ।**
**स्त्यानावनद्धघनशोणितशोणपाणिरुत्तंसयिष्यति कचांस्तव देवि भीमः ॥'**

इत्यनेन वेणीसंहारहेतोः क्रोधबीजस्य पुनरुपादानात्समाधानम् ॥

अथ **विधानम्**—

**विधानं सुखदुःखकृत् ॥ २८ ॥**

यथा मालतीमाधवे प्रथमेऽङ्के ( १।३२ ) '**माधवः**—

यान्त्या मुहुर्वलितकन्धरमाननं तदावृत्तवृत्तशतपत्रनिभं वहन्त्या ।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या गाढं निखात इव मे हृदये कटाक्षः ॥
यद्विस्मयस्तिमितमस्तमितान्यभावमानन्दमन्दममृतप्लवनादिवाभूत् ।
तत्संनिधौ तदधुना हृदयं मदीयमङ्गारचुम्बितमिव व्यथमानमास्ते ॥'

( मालती० १।२२ )

इत्यनेन मालत्यवलोकनस्यानुरागस्य समागमहेतोर्बीजानुगुण्येनैव माधवस्य सुखदुःखकारित्वाद्विधानमिति ।

यथा च वेणीसंहारे ( १।२६ )—'**द्रौपदी**—[4]णाध, पुणोवि तुम्मेहिं अहं आअच्छिअ समासासिदव्वा । **भीमः**—ननु पाञ्चालराजतनये, किमद्याप्यलीकाश्वासनया ।

भूयः परिभवक्लान्तिलज्जाविधुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम् ॥'

इति संग्रामस्य सुखदुःखहेतुत्वाद्विधानमिति ॥

---

१ 'भर्त्रि, एतत्सर्वं सज्जम् ।' इति च्छाया. २ 'अहो प्रमादः परिजनस्य । यस्यैव दर्शनपथात्प्रयत्नेन रक्ष्यते तस्यैव कथं दृष्टिगोचरमागता । भवतु । एवं तावत् । चेटि सागरिके, कथं त्वमद्य पराधीने परिजने मदनोत्सवे सागरिकां मुक्त्वेहागता । तस्मात्तत्रैव गच्छ ।' इति च्छाया. ३ 'सारिका तावन्मया सुसंगताया हस्ते समर्पिता । प्रेक्षितुं च मे कुतूहलम् । तदलक्षिता प्रेक्षिष्ये ।' इति च्छाया. ४ 'नाथ, पुनरपि त्वयाहमागत्य समाश्वासयितव्या ।' इति च्छाया.

अथ परिभावना—

**परिभावोऽद्भुतावेशः**

यथा रत्नावल्याम् ( पृ० ४४ )—'**सागरिका**—( दृष्ट्वा सविस्मयम् । ) कधं पच्चक्खो ज़ेव अणंगो पूअं पडिच्छेदिता । अहंपि इध ठ्ठिदा ज़ेव णं पूजइस्सं ।'[1] इत्यनेन वत्सराजस्यानङ्गरूपतयापह्नवादनङ्गस्य च प्रत्यक्षस्य पूजाग्रहणस्य लोकोत्तरत्वादद्भुतरसावेशः परिभावना ।

यथा च वेणीसंहारे ( पृ० ३० )—'**द्रौपदी**—किं[2] दाणिं एसो पलअजलधरत्थणिदमंसलो खणे खणे समरदुंदुमी ताडीअदि त्ति ।' इति लोकोत्तरसमरदुन्दुभिध्वनेर्विस्मयरसावेशाद्द्रौपद्याः परिभावना ॥

अथोद्भेदः—

**उद्भेदो गूढभेदनम् ।**

यथा रत्नावल्यां वत्सराजस्य कुसुमायुधव्यपदेशगूढस्य वैतालिकवचसा 'अस्तापास्त–' ( १।२३ ) इत्यादिना 'उदयनस्य–' इत्यन्तेन बीजानुगुण्येनैवोद्भेदनादुद्भेदः ।

यथा च वेणीसंहारे ( पृ० २९ )—'आर्य, किमिदानीमध्यवस्यति गुरुः ।' इत्युपक्रमे '( नेपथ्ये । )

यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसंभृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते ॥ ( १।२४ )

**भीमः**—( सहर्षम् । ) जृम्भतां जृम्भतां संप्रत्यप्रतिहतमार्यस्य क्रोधज्योतिः ।' इत्यनेन छन्नस्य द्रौपदीकेशसंयमनहेतोर्युधिष्ठिरक्रोधस्योद्भेदः ॥

अथ करणम्—

**करणं प्रकृतारम्भो**

यथा रत्नावल्याम् ( पृ० ४४ )—'णमो[3] दे कुसुमाउह, ता अमोहदंसणो मे भविस्ससि त्ति दिट्ठं जं पेक्खिदव्वं । ता जाव ण को वि मं पेक्खइ ता गमिस्सं ।' इत्यनेनान्तराङ्कप्रकृतनिर्विघ्नदर्शनारम्भणात्करणम् ।

यथा च वेणीसंहारे ( पृ० ३१ )—'तत्पाञ्चालि, गच्छामो वयमिदानीं कुरुकुलक्षयाय' । **सहदेवः**—'आर्य, गच्छाम इदानीं गुरुजनानुज्ञाता विक्रमानुरूपमाचरितुम् ।' इत्यनेनानन्तराङ्कप्रस्तूयमानसंग्रामारम्भणात्करणमिति । सर्वत्र चेहोद्देशप्रतिनिर्देशवैषम्यं क्रियाक्रमस्याविवक्षितत्वादिति ॥

---

१ 'कथं प्रत्यक्ष एवानङ्गः पूजां प्रतिच्छेदिता । अहमपीहास्थितैवैनं पूजयिष्यामि ।' इति च्छाया. २ 'किमिदानीमेष प्रलयजलधरस्तनितमांसलः क्षणे क्षणे समरदुन्दुभिस्ताड्यते ।' इति च्छाया. ३ 'नमस्ते कुसुमायुध, तदमोघदर्शनो मे भविष्यसीति । दृष्टं यत्प्रेक्षितव्यम् । तद्यावन्न कोऽपि मां प्रेक्षते तद्गमिष्यामि ।' इति च्छाया.

अथ भेदः—

**भेदः प्रोत्साहना मता ॥ २९ ॥**

यथा वेणीसंहारे ( १।२७ )—'[1]णाथ, मा क्खु जण्णसेणीपरिभवुद्दीविदकोवा अणवेक्खिदसरीरा परिक्कमिस्सध । जदो अप्पमत्तसंचरणीयाइं सुणीयंति रिउबलाइं । भीमः—अयि सुक्षत्रिये,

अन्योन्यास्फालभिन्नद्विपरुधिरवसासान्द्रमस्तिष्कपङ्के
मग्नानां स्यन्दनानामुपरिकृतपदन्यासविक्रान्तपत्तौ ।
स्फीतासृक्पानगोष्ठीरसदशिवशिवातूर्यनृत्यत्कबन्धे
संग्रामैकार्णवान्तःपयसि विचरितुं पण्डिताः पाण्डुपुत्राः ॥'

इत्यनेन विषण्णाया द्रौपद्याः क्रोधोत्साहबीजानुगुण्येनैव प्रोत्साहनाद्भेद इति ॥

एतानि च द्वादश मुखाङ्गानि बीजारम्भद्योतकानि साक्षात्पारम्पर्येण वा विधेयानि । एतेषामुपक्षेपपरिकरपरिन्यासयुक्त्युद्भेदसमाधानानामवश्यंभावितेति ॥

अथ साङ्गं **प्रतिमुखसंधि**माह—

**[2]लक्ष्यालक्ष्यतयोद्भेदस्तस्य प्रतिमुखं भवेत् ।**
**बिन्दुप्रयत्नानुगमादङ्गान्यस्य त्रयोदश ॥ ३० ॥**

तस्य बीजस्य किंचिल्लक्ष्यः किंचिदलक्ष्य इवोद्भेदः प्रकाशनं तत्प्रतिमुखम् । यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किंचिल्लक्ष्यस्य वासवदत्तया च चित्रफलकवृत्तान्तेन किंचिदुन्नीयमानस्य दृश्यादृश्यरूपतयोद्भेदः प्रतिमुखसंधिरिति ।

वेणीसंहारेऽपि द्वितीयेऽङ्के ( २।५ ) भीष्मादिवधेन किंचिल्लक्ष्यस्य कर्णादिवधाच्चालक्ष्यस्य क्रोधबीजस्योद्भेदः ।

'सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम् ।
स्वबलेन निहन्ति संयुगे नचिरात्पाण्डुसुतः सुयोधनम् ॥'

इत्यादिभिः

'दुःशासनस्य हृदयक्षतजाम्बुपाने दुर्योधनस्य च यथा गदयोरुभङ्गे ।
तेजस्विनां समरमूर्धनि पाण्डवानां ज्ञेया जयद्रथवधेऽपि तथा प्रतिज्ञा ॥'
( वे. सं. २।२८ )

इत्येवमादिभिश्चोद्भेदः प्रतिमुखसंधिरिति ॥

अस्य च पूर्वाङ्कोपक्षिप्तबिन्दुरूपबीजप्रयत्नार्थानुगतानि त्रयोदशाङ्गानि भवन्ति । तान्याह—

---

१ 'नाथ, मा खलु याज्ञसेनीपरिभवोद्दीपितकोपा अनवेक्षितशरीराः परिक्रामिष्यथ । यतोऽप्रमत्तसंचरणीयानि श्रूयन्ते रिपुबलानि ।' इति छाया. २ 'लक्ष्यालक्ष्य इवोद्भेदः' इति पाठः.

**विलासः परिसर्पश्च विधूतं शमनर्मणी ।**
**नर्मद्युतिः प्रगमनं निरोधः पर्युपासनम् ॥ ३१ ॥**
**वज्रं पुष्पमुपन्यासो वर्णसंहार इत्यपि ।**

यथोद्देशं लक्षणमाह—

**रैत्यर्थेहा विलासः स्याद्**

यथा रत्नावल्याम्—'**सागरिका**—हिअँअ, पसीद पसीद । किं इमिणा आआसमेत्तफलेण दुल्लहजणप्पत्थणाणुबन्धेण ।' इत्युपक्रमे,—'तँहावि आलेक्खगदं तं जणं कदुअ जधासमीहिदं करिस्सं । तहावि तस्स णत्थि अण्णो दंसणोवाउ त्ति ।' इत्येतैर्वत्सराजसमागमरतिं चित्रादिजन्यामप्युद्दिश्य सागरिकायाश्चेष्टाप्रयत्नोऽनुरागबीजानुगतो विलास इति ॥

अथ **परिसर्पः**—

**दृष्टानष्टानुसर्पणम् ॥ ३२ ॥**

**परिसर्पो**

यथा वेणीसंहारे( २।२ )—'**कञ्चुकी**—योऽयमुद्यतेषु बलवत्सु, अथवा किं बलवत्सु, वासुदेवसहायेष्वरिष्वद्याप्यन्तःपुरसुखमनुभवति । इदमपरमयथातथं स्वामिनः,—

आशस्त्रग्रहणादकुण्ठपरशोस्तस्यापि जेता मुने-
स्तापायास्य न पाण्डुसूनुभिरयं भीष्मः शरैः शायितः ।
प्रौढानेकधनुर्धरारिविजयश्रान्तस्य चैकाकिनो
बालस्यायमरातिलूनधनुषः प्रीतोऽभिमन्योर्वधात् ॥'

इत्यनेन भीष्मादिवधे दृष्टस्याभिमन्युवधान्नष्टस्य बलवतां पाण्डवानां वासुदेवसहायानां सङ्ग्रामलक्षणबिन्दुबीजप्रयत्नान्वयेन कञ्चुकिमुखे बीजानुसर्पणं परिसर्प इति ।

यथा च रत्नावल्यां सारिकावचनचित्रदर्शनाभ्यां सागरिकानुरागबीजस्य दृष्टनष्टस्य 'क्वासौ क्वासौ' इत्यादिना वत्सराजेनानुसरणात्परिसर्प इति ॥

अथ **विधूतम्**—

**विधूतं स्यादरतिस्**

यथा रत्नावल्याम् (पृ० ६२)—'**सागरिका**—सँहि, अहिअं मे संतावो बाधेदि । ( सुसङ्गता दीर्घिकातो नलिनीदलानि मृणालिकाश्चानीयास्या अङ्गे ददाति । ) **साग-**

---

१ 'प्रगयणम्' इति पाठः. २ 'रत्युत्थेहा' इति पाठः. ३ 'हृदय, प्रसीद प्रसीद । किमनेनायासमात्रफलेन दुर्लभजनप्रार्थनानुबन्धेन ।' इति च्छाया. ४ 'तथाप्यालेख्यगतं तं जनं कृत्वा यथासमीहितं करिष्यामि । तथापि तस्य नास्त्यन्यो दर्शनोपाय इति ।' इति च्छाया. ५ 'सखि, अधिकं मे संतापो बाधते ।' इति च्छाया.

रिका—( तानि क्षिपन्ती । ) सहि[1], अवणेहि एदाइं । किं अआरणे अत्ताणं आयासेसि ? णं भणामि,—

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।

पिअसहि विसमं पेम्मं मरणं सरणं णवर एक्कं ॥' ( रत्ना० २।१ )

इत्यनेन सागरिकाया बीजान्वयेन शीतोपचारविधूननात् विधूतम् ।

यथा च वेणीसंहारे ( पृ० ४१-५१ ) भानुमत्या दुःखप्रदर्शनेन दुर्योधनस्यानिष्टशङ्कया पाण्डवविजयशङ्कया वा रतेः विधूननमिति ॥

अथ **शमः**—

**तच्छमः शमः ।**

तस्या अरतेरुपशमः शमः । यथा रत्नावल्याम् (पृ० ८७)—'**राजा**—वयस्य, अनया लिखितोऽहमिति यत्सत्यमात्मन्यपि मे बहुमानस्तत्कथं न पश्यामि ।' इति प्रक्रमे '**सागरिका**—( आत्मगतम् । ) हिअअ[2], समस्सस । मणोरहो वि दे एत्तिअं भूमिं ण गदो ।' ( रत्ना० पृ० ८६ ) इति किंचिदरत्युपशमात् शम इति ॥

अथ **नर्म**—

**परिहासवचो नर्म**

यथा रत्नावल्याम् ( पृ० ९० )—'**सुसङ्गता**—सहि[3], जस्स कए तुमं आअदा सो अअं पुरदो चिट्ठदि । **सागरिका**—( सासूयम् । ) सुसंगदे[4], कस्स कए अहं आअदा ? **सुसङ्गता**—अइ[5] अप्पसंकिदे, णं चित्तफलअस्स । ता गेण्ह एदं ।' इत्यनेन बीजान्वितं परिहासवचनं नर्म ।

यथा च वेणीसंहारे ( पृ० ४९ )—'( दुर्योधनश्चेटीहस्तादर्घपात्रमादाय देव्याः समर्पयति । पुनः ) **भानुमती**—( अर्घं दत्वा । ) हला[6], उवणेहि मे कुसुमाइं जाव अवराणं पि देवाणं सवरिअं णिवत्तेमि ( हस्तौ प्रसारयति । दुर्योधनः पुष्पाण्युपनयति । भानुमत्यास्तत्स्पर्शजातकम्पाया हस्तात्पुष्पाणि पतन्ति । )' इत्यनेन नर्मणा दुःस्वप्रदर्शनोपशमार्थं देवतापूजाविघ्नकारिणा बीजोद्घाटनात्परिहासस्य प्रतिमुखाङ्गत्वं युक्तमिति ॥

अथ **नर्मद्युतिः**—

**धृतिस्तज्जा द्युतिर्मता ॥ ३२ ॥**

---

१ 'सखि, अपनयैतानि । किमकारण आत्मानमायासयसि ? ननु भणामि,—

दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा ।

प्रियसखि विषमं प्रेम मरणं शरणं केवलमेकम् ॥' इति च्छाया.

२ 'हृदय, समाश्वसिहि । मनोरथोऽपि त एतावतीं भूमिं न गतः ।' इति च्छाया.

३ 'सखि, यस्य कृते त्वमागता सोऽयं पुरतस्तिष्ठति ।' इति च्छाया. ४ 'सुसङ्गते, कस्य कृतेऽहमागता ?' इति च्छाया. ५ 'अयि आत्मशङ्किते, ननु चित्रफलकस्य । तद्गृहाणैतत् ।' इति च्छाया. ६ 'हला, उपनय मे कुसुमानि यावदपरेषामपि देवानां सपर्यां निवर्तयामि ।' इति च्छाया.

यथा रत्नावल्याम् (पृ० ९७)—सुसङ्गता-सैहि, अदिणिठ्ठुरा, दाणिं सि तुमं। जा एवं पि भट्टिणा हत्थावलंबिदा कोवं ण मुंचसि । सागरिका—( सभ्रूभङ्गमीषद्विहस्य । ) सुसंगदे, दाणिं पि ण विरमसि ।' इत्यनेनानुरागबीजोद्घाटनान्वयेन धृतिर्नर्मजा द्युतिरिति दर्शितमिति ॥

अथ प्रगमनम्[3]—

**उत्तरा वाक्प्रगमनं**[3]

यथा रत्नावल्याम् (पृ० ८१)—'विदूषकः—[4]भो वअस्स, दिट्ठिआ वड्ढसे । राजा—( सकौतुकम् । ) वयस्य, किमेतत् । विदूषकः—'[5]भो, एदं क्खु तं जं मए भणिदं तुमं एव्व आलिहिदो । को अण्णो कुसुमाउहव्ववदेसेण णिण्हवीअदि ।' इत्यादिना ।

'परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः किमु स्यात् ॥' ( रत्ना० २।१५ )

इत्यनेन राजविदूषकसागरिकासुसङ्गतानामन्योन्यवचनेनोत्तरोत्तरानुरागबीजोद्घाटनात् प्रगमनमिति[3] ॥

अथ निरोधः—

**हितरोधो निरोधनम् ।**

यथा रत्नावल्याम् ( पृ० ९९ )—'राजा—धिङ् मूर्ख,—

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा ।
रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता ॥'

इत्यनेन वत्सराजस्य सागरिकासमागमरूपहितस्य वासवदत्ताप्रवेशसूचकेन विदूषकवचसा निरोधात् निरोधनमिति ॥

अथ पर्युपासनम्—

**पर्युपास्तिरनुनयः**

यथा रत्नावल्याम् ( २।२० )—'राजा—

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषोऽस्तीति त्वमिदमपि हि ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ॥'

इत्यनेन चित्रगतयोर्नायकयोर्दर्शनात्कुपितायाः वासवदत्ताया अनुनयनं नायकयोरनुरागोद्घाटनान्वयेन पर्युपासनमिति ॥

---

१ 'सखि, अतिनिष्ठुरेदानीमसि त्वम् । यैवमपि भर्त्रा हस्तावलम्बिता कोपं न मुञ्चसि ।' इति च्छाया. २ 'सुसङ्गते, इदानीमपि न विरमसि ।' इति च्छाया. ३ 'प्रगयणम्' इति पाठः. ४ 'भो वयस्य, दिष्ट्या वर्धसे ।' इति च्छाया. ५ 'भोः, एतत्खलु तद्यन्मया भणितं त्वमेवालिखितम् । कोऽन्यः कुसुमायुधव्यपदेशेन निह्नूयते ।' इति च्छाया.

अथ पुष्पम्—

पुष्पं वाक्यं विशेषवत् ॥ ३४ ॥

यथा रत्नावल्याम् ( पृ० ९७ )—'( राजा सागरिकां हस्ते गृहीत्वा स्पर्शं नाटयति । ) विदूषकः—[1] भो एसा अपुव्वा सिरी तुए समासादिदा । राजा—वयस्य, सत्यम्,—

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।
कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः ॥' ( २।१८ )

इत्यनेन नायकयोः साक्षादन्योन्यदर्शनादिना सविशेषानुगोद्घाटनात् पुष्पम् ॥

अथोपन्यासः—

[2] उपन्यासस्तु सोपायं

यथा रत्नावल्याम् ( पृ० ९३ )—'सुसङ्गता—[3] भट्टा, अलं संकाए । मए वि भट्टिणो पसाएण कीलिदं एव्व । ता किं कण्णाभरणकेण । अदो वि मे गरुओ पसाओ, जं कीस तए अहं एत्थ आलिहिअ त्ति कुविआ मे पिअसही साअरिआ । ता पसादीअदु ।' इत्यनेन सुसङ्गतावचसा सागरिका मया लिखिता सागरिकया च त्वमिति सूचयता प्रसादोपन्यासेन बीजोद्भेदात् उपन्यास इति ॥

अथ वज्रम्—

वज्रं प्रत्यक्षनिष्ठुरम् ।

यथा रत्नावल्याम् ( पृ० १०३ )—'वासवदत्ता—( फलकं निर्दिश्य । ) [4] अज्जउत्त, एसावि जा तुह समीवे, एदं किं वसंतअस्स विण्णाणं ।' पुनः '[5] अज्जउत्त, ममावि एदं चित्तकम्म पेक्खंतीए सीसवेअणा समुप्पण्णा ।' इत्यनेन वासवदत्तया वत्सराजस्य सागरिकानुरागोद्भेदनात्प्रत्यक्षनिष्ठुराभिधानं वज्रमिति ॥

अथ वर्णसंहारः—

[6] चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥ ३५ ॥

यथा वीरचरिते तृतीयेऽङ्के ( ३।५ )—

'परिषदियमृषीणामेष वृद्धो युधाजित्सह नृपतिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः प्रभुरपि जनकानामद्रुहो याचकास्ते ॥'

इत्यनेन ऋषिक्षत्रियामात्यादीनां संगतानां वर्णानां वचसा रामविजयाशंसिनः परशुरामदुर्नयस्याद्रोहयाच्ञाद्वारेणोद्भेदनात् वर्णसंहार इति ॥

---

१ 'भोः, एषाऽपूर्वा श्रीस्त्वया समासादिता ।' इति च्छाया. २ 'प्रसादनमुपन्यासः' इति पाठः. ३ 'भर्तः, अलं शङ्कया । मयापि भर्तुः प्रसादेन क्रीडितमेव तत्किं कर्णाभरणेन । असावपि मे गुरुः प्रसादः, यत्कथं त्वयाहमत्रालिखितेऽपि कुपिता मे प्रियसखी सागरिका । तत्प्रसाद्यताम् ।' इति च्छाया. ४ 'आर्यपुत्र, एषापि वा तव समीपे, एतत्किं वसन्तकस्य विज्ञानम् ।' इति च्छाया. ५ 'आर्यपुत्र, ममाप्येतच्चित्रकर्म पश्यन्त्याः शीर्षवेदना समुत्पन्ना ।' इति च्छाया. ६ 'चातुर्वर्णो' इति पाठः.

एतानि च त्रयोदश प्रतिमुखाङ्गानि मुखसंध्युपक्षिप्तबिन्दुलक्षणावान्तरबीजमहाबीजप्रयत्नानुगतानि विधेयानि । एतेषां च मध्ये परिसर्पप्रशमवज्रोपन्यासपुष्पाणां प्राधान्यम् । इतरेषां यथासंभवं प्रयोग इति ॥

अथ **गर्भसंधिमाह**—

**गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणं मुहुः ।**
**द्वादशाङ्गः पताका स्यान्न वा स्यात्प्राप्तिसंभवः ॥ ३६ ॥**

प्रतिमुखसंधौ लक्ष्यालक्ष्यरूपतया स्तोकोद्भिन्नस्य बीजस्य सविशेषोद्भेदपूर्वकः सान्तरायो लाभः पुनर्विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनश्च तस्यैवान्वेषणं वारंवारं सोऽनिर्धारितैकान्तफलप्राप्त्याशात्मको गर्भसंधिरिति । तत्र चौत्सर्गिकत्वेन प्राप्तायाः पताकाया अनियमं दर्शयति—'पताका स्यान्न वा' इत्यनेन । प्राप्तिसंभवस्तु स्यादेवेति दर्शयति—'स्यात्' इति । यथा रत्नावल्यां तृतीयेऽङ्के वत्सराजस्य वासवदत्तालक्षणापायेन तद्वेषपरिग्रहसागरिकाभिसरणोपायेन च विदूषकवचसा सागरिकाप्राप्त्याशा प्रथमं पुनर्वासवदत्तया विच्छेदः पुनः प्राप्तिः पुनर्विच्छेदः पुनरपायनिवारणोपायान्वेषणं ( रत्ना० पृ० १३९ ) 'नास्ति देवीप्रसादनं मुक्त्वान्य उपायः' इत्यनेन दर्शितमिति ॥

स च द्वादशाङ्गो भवति, तान्युद्दिशति—

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः ।**
**संग्रहश्चानुमानं च तोटकाधिबले तथा ॥ ३७ ॥**
**उद्वेगसंभ्रमाक्षेपा लक्षणं च प्रणीयते ।**

यथोद्देशं लक्षणमाह—

**अभूताहरणं छद्म**

यथा रत्नावल्याम् ( पृ० १०९ )—'[1]साधु रे अमच्च वसंतअ, साधु । अदिसइदो तुए अमच्चो जोगंधराअणो इमाए संधिविग्गहच्चिंताए ।' इत्यादिना प्रवेशकेन गृहीतवासवदत्तावेषायाः सागरिकाया वत्सराजाभिसरणं छद्म विदूषकसुसङ्गताकृतकाञ्चनमालानुवादद्वारेण दर्शितमिति अभूताहरणम् ॥

अथ **मार्गः**—

**मार्गस्तत्त्वार्थकीर्तनम् ॥ ३८ ॥**

यथा रत्नावल्याम् ( पृ० ११६ )—**विदूषकः**—[2]दिट्ठिआ वड्ढसि समीहिदब्भधिकाए कज्जसिद्धीए । **राजा**—वयस्य, कुशलं प्रियायाः ? **विदूषकः**—[3]अइरेण सअं ज्जेव्व पेक्खिअ जाणिहिसि । **राजा**—दर्शनमपि भविष्यति ? **विदूषकः**—

---

१ 'साधु रे अमात्य वसन्तक, साधु । अतिशयितस्त्वयामात्यो यौगंधरायणोऽनया संधिविग्रहच्चिन्तया ।' इति च्छाया. २ 'दिष्ट्या वर्धसे समीहिताभ्यधिकया कार्यसिद्ध्या ।' इति च्छाया. ३ 'अचिरेण स्वयमेव प्रेक्ष्य ज्ञास्यसि ।' इति च्छाया.

( सगर्वम् । ) कीस[1] ण भविस्सदि, जस्स दे उवहसिदविहप्फदिबुद्धिविहवो अहं अमच्चो । **राजा**—तथापि कथमिति श्रोतुमिच्छामि । **विदूषकः**—( कर्णे कथयति । ) एॅव्वं[2] ।' इत्यनेन यथा विदूषकेण सागरिकासमागमः सूचितः, तथैव निश्चितरूपो राज्ञे निवेदित इति तत्त्वार्थकथनात् मार्ग इति ॥

अथ **रूपम्**—

**रूपं वितर्कवद्वाक्यं**

यथा रत्नावल्याम् ( पृ० १२४ )—'**राजा**—अहो किमपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवं जनं प्रति पक्षपातः । तथा हि,—

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥ ( ३।९ )

कथं चिरयति वसन्तकः ? किं नु खलु विदितः स्यादयं वृत्तान्तो देव्याः ।' इत्यनेन रत्नावलीसमागमप्राप्त्याशानुगुण्येनैव देवीशङ्कायाश्च वितर्कात् रूपमिति ॥

अथो**दाहरणम्**—

**सोत्कर्षं स्यादुदाहृतिः ।**

यथा रत्नावल्याम् ( पृ० ११५ )—'**विदूषकः**—( सहर्षम् । ) ही[3] ही भोः, कोसंबीरज्जलाहेणावि ण तादिसो वअस्सस्स परितोसो आसि, यादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदि त्ति तक्केमि ।' इत्यनेन रत्नावलीप्राप्तिवार्तापि कौशाम्बीराज्यलाभादतिरिच्यत इत्युत्कर्षाभिधानात् उदाहृतिरिति ॥

अथ **क्रमः**—

**क्रमः संचिन्त्यमानाप्तिर्**

यथा रत्नावल्याम् ( पृ० १२८ )—'**राजा**—उपनतप्रियासमागमोत्सवस्यापि मे किमिदमत्यर्थमुत्ताम्यति चेतः । अथवा,—

तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने ।
तपति प्रावृषि सुतरामभ्यर्णजलागमो दिवसः ॥ ( ३।१० )

**विदूषकः**—( आकर्ण्य । ) भोदि[4] सागरिए, एसो पिअवअस्सो तुमं ज्जेव उद्दिसिअ उक्कं ठाणिब्भरं मंतेदि । ता निवेदेमि से तुहागमणं ।' इत्यनेन वत्सराजस्य सागरिकासमागममभिलषत एव भ्रान्तसागरिकाप्राप्तिरिति क्रमः ॥

---

१ 'कथं न भविष्यति, यस्य त उपहसितबृहस्पतिबुद्धिविभवोऽहममात्यः ।' इति च्छाया. २ 'एवम्' इति च्छाया. ३ 'ही ही भोः, कौशाम्बीराज्यलाभेनापि न तादृशो वयस्यस्य परितोष आसीत्, यादृशो मम सकाशात्प्रियवचनं श्रुत्वा भविष्यतीति तर्कयामि ।' इति च्छाया. ४ 'भवति सागरिके, एष प्रियवयस्यस्त्वामेवोद्दिश्योत्कण्ठानिर्भरं मन्त्रयति । तन्निवेदयामि तस्मै तवागमनम् ।' इति च्छाया.

अथ क्रमान्तरं मतभेदेन—

**भावज्ञानमथापरे ॥ ३९ ॥**

यथा रत्नावल्याम् (पृ० १२९)—'**राजा**—(उपसृत्य।) प्रिये सागरिके,—

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥' (३।११)

इत्यादिना 'इह तदप्यस्त्येव बिम्बाधरे।' (३।१३) इत्यन्तेन वासवदत्तया वत्सराजभावस्य ज्ञातत्वात् क्रमान्तरमिति ॥

अथ संग्रहः—

**संग्रहः सामदानोक्तिर्**

यथा रत्नावल्याम् (पृ० ११७)—'साधु वयस्य, साधु। इदं ते पारितोषिकं कटकं ददामि।' इत्याभ्यां सामदानाभ्यां विदूषकस्य सागरिकासमागमकारिणः संग्रहात् संग्रह इति ॥

अथानुमानम्—

**अभ्यूहो लिङ्गतोऽनुमा।**

यथा रत्नावल्याम् (पृ० १३७)—'**राजा**—धिङ् मूर्ख, त्वत्कृत एवायमापतितोऽस्माकमनर्थः। कुतः,—

समारूढा प्रीतिः प्रणयबहुमानात्प्रतिदिनं
व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ (३।१५)

**विदूषकः**—[1]भो वअस्स, वासवदत्ता किं करिस्सदि त्ति ण जाणामि। सागरिआ उण दुक्करं जीविस्सदि त्ति तक्केमि।' इत्यत्र प्रकृष्टप्रेमस्खलनेन सागरिकानुरागजन्येन वासवदत्ताया मरणाभ्यूहनं अनुमानमिति ॥

अथाधिबलम्—

**अधिबलमभिसंधिः**

यथा रत्नावल्याम् (पृ० १२६)—'**काञ्चनमाला**—[2]भट्टिणि, इअं सा चित्तसालिआ। ता वसंतअस्स सण्णं करेमि। (छोटिकां ददाति।)' इत्यादिना वासवदत्ताकाञ्चनमालाभ्यां सागरिकासुसङ्गतावेषाभ्यां राजविदूषकयोरभिसंधीयमानत्वादधिबलमिति ॥

---

१ 'भो वयस्य, वासवदत्ता किं करिष्यतीति न जानामि। सागरिका पुनर्दुष्करं जीविष्यतीति तर्कयामि।' इति च्छाया. २ 'भर्त्रि, इयं सा चित्रशालिका। तद्वसन्तकस्य संज्ञां करोमि।' इति च्छाया.

अथ तोटकम्—

**संरब्धं तोटकं वचः ॥ ४० ॥**

यथा रत्नावल्याम् (पृ० १४७)—**वासवदत्ता**—(उपसृत्य ।) [१]अज्जउत्त, जुत्तमिणं सरिसमिणं । (पुनः सरोषम् ।) अज्जउत्त, उट्ठेहि । किं अज्जवि आहिजाइए सेवादुक्खमणुभवीअदि । कंचणमाले, एदेण जेव पासेण बंधिअ आणेहि एणं दुट्ठबम्हणं । एदं पि दुट्ठकण्णअं अग्गदो करेहि । इत्यनेन वासवदत्तासंरब्धवचसा सागरिकासमागमान्तरायभूतेनानियतप्राप्तिकारणं तोटकमुक्तम् ॥ यथा च वेणीसंहारे (३।३४)—

'प्रयत्नपरिबोधितः स्तुतिभिरद्य शेषे निशाम् ।'

इत्यादिना,

'धृतायुधो यावदहं तावदन्यैः किमायुधैः ।' (३।४६)

इत्यन्तेनान्योन्यं कर्णाश्वत्थाम्नोः संरब्धवचसा सेनाभेदकारिणा पाण्डवविजयप्राप्त्याशान्वितं तोटकमिति ॥

ग्रन्थान्तरे तु—

**तोटकस्यान्यथाभावं ब्रुवतेऽधिबलं बुधाः ।**

यथा रत्नावल्याम् (पृ० १३५)—'**राजा**—देवि, एवमपि प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि,—

आताम्रतामपनयामि विलक्ष एव लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखेन्दुबिम्बे हर्तुं क्षमो यदि परं करुणा मयि स्यात् ॥'
(३।१४)

**संरब्धवचनं यत्तु तोटकं तदुदाहृतम् ॥ ४१ ॥**

यथा रत्नावल्याम् (पृ० १२४)—'**राजा**—प्रिये वासवदत्ते, प्रसीद प्रसीद । **वासवदत्ता**—(अश्रूणि धारयन्ती ।) [२]अज्जउत्त, मा एवं भण । अण्णसंकंताइं खु एदाइं अक्खराइं त्ति ।'

यथा च वेणीसंहारे (पृ० १०५)—'**राजा**—अये सुन्दरक, कच्चित्कुशलमङ्गराजस्य? **पुरुषः**—[३]कुसलं सरीरमेत्तकेण । **राजा**—किं तस्य किरीटिना हता धौरेयाः, क्षत्तः सारथिः, भग्नो वा रथः? **पुरुषः**—[४]देव, ण भग्गो रहो । भग्गो से मणोरहो । **राजा**—(ससंभ्रमम् ।) कथम्?' इत्येवमादिना संरब्धवचसा तोटकमिति ॥

---

१ 'आर्यपुत्र, युक्तमिदं सदृशमिदम् । आर्यपुत्र, उत्तिष्ठ । किमद्याप्याभिजात्याः सेवादुःखमनुभूयते । काञ्चनमाले, एतेनैव पाशेन बद्ध्वानयैनं दुष्टब्राह्मणम् । एतामपि दुष्टकन्यकामग्रतः कुरु ।' इति च्छाया. २ 'आर्यपुत्र, मैवं भण । अन्यसंक्रान्तानि खल्वेतान्यक्षराणीति ।' इति च्छाया. ३ 'कुशलं शरीरमात्रकेण ।' इति च्छाया. ४ 'देव, न भग्नो रथः । भग्नोऽस्य मनोरथः ।' इति च्छाया.

अथोद्वेगः—

**उद्वेगोऽरिकृता भीतिः**

यथा रत्नावल्याम् (पृ० १४९)—'**सागरिका**—(आत्मगतम्।) कहं अकिदपुण्णेहिं अत्तणो इच्छाए मरिउं पि ण पारीअदि।'[1] इत्यनेन वासवदत्तातः सागरिकाया भयमिति उद्वेगः। यो हि यस्यापकारी स तस्यारिः।

यथा च वेणीसंहारे (पृ० ९६)—'**सूतः**—(श्रुत्वा सभयम्।) कथमासन्न एवासौ कौरवराजपुत्रमहावनोत्पातमारुतो मारुतिरनुपलब्धसंज्ञश्च महाराजः। भवतु। दूरमपहरामि स्यन्दनम्। कदाचिदयमनार्यो दुःशासन इवास्मिन्नप्यनार्यमाचरिष्यति।' इत्यरिकृता भीतिरुद्वेगः॥

अथ **संभ्रमः**—

**शङ्कात्रासौ च संभ्रमः।**

यथा रत्नावल्याम् (पृ० १४१)—'**विदूषकः**—(पश्यन्।) का उण एसा। (ससंभ्रमम्।) कधं देवी वासवदत्ता अत्ताणं वावादेदि।[2] **राजा**—(ससंभ्रममुपसर्पन्।) क्वासौ क्वासौ।' इत्यनेन वासवदत्ताबुद्धिगृहीतायाः सागरिकाया मरणाशङ्कया संभ्रम इति।

यथा च वेणीसंहारे (पृ० ९३)—'(नेपथ्ये कलकलः।) **अश्वत्थामा**—(ससंभ्रमम्।) मातुल मातुल, कष्टम्। एष भ्रातुः प्रतिज्ञाभङ्गभीरुः किरीटी समं शरवर्षैर्दुर्योधनराधेयावभिद्रवति। सर्वथा पीतं शोणितं दुःशासनस्य भीमेन।' इति शङ्का। तथा '(प्रविश्य संभ्रान्तः सप्रहारः) **सूतः**—त्रायतां त्रायतां कुमारः।' इति त्रासः। इत्येताभ्यां त्रासशङ्काभ्यां दुःशासनद्रोणवधसूचकाभ्यां पाण्डवविजयप्राप्त्याशान्वितः संभ्रम इति॥

अथाक्षेपः—

**गर्भबीजसमुद्भेदादाक्षेपः परिकीर्तितः॥ ४२॥**

यथा रत्नावल्याम् (पृ० १३९)—'**राजा**—वयस्य, देवीप्रसादनं मुक्त्वा नान्यमत्रोपायं पश्यामि।' पुनः क्रमान्तरे (पृ० १४८) 'सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशीभूताः स्मः।' पुनः (पृ० १५०) 'तत्किमिह स्थितेन देवीमेव गत्वा प्रसादयामि।' इत्यनेन देवीप्रसादायत्ता सागरिकासमागमसिद्धिरिति गर्भबीजोद्भेदादाक्षेपः।

यथा च वेणीसंहारे (पृ० १०३)—'**सुन्दरकः**—[3]अहवा किमेत्थ देव्वं उआलहामि। तस्स क्खु एदं णिब्भच्छिदविदुरवअणबीअस्स परिभूदपिदामहहिदोवदेसं-

---

१ 'कथमकृतपुण्यैरात्मन इच्छया मर्तुमपि न पार्यते।' इति च्छाया. २ 'का पुनरेषा। कथं देवी वासवदत्तात्मानं व्यापादयति।' इति च्छाया. ३ 'अथवा किमत्र दैवमुपालभामि। तस्य खल्वेतन्निर्भर्त्सितविदुरवचनबीजस्य परिभूतपितामहहितोपदेशाङ्कुरस्य शकुनिप्रोत्साहनारूढमूलस्य कूटविषशाखिनः पाञ्चालीकेशग्रहणकुसुमस्य फलं परिणमति।' इति च्छाया.

कुरस्स सउणिप्पोच्छाहणारूढमूलस्स कूडविससाहिणो पंचालीकेसग्गहणकुसुमस्स फलं परिणमेदि ।' इत्यनेन बीजमेव फलोन्मुखतयाक्षिप्यत इत्याक्षेपः ।

एतानि द्वादश गर्भाङ्गानि प्राप्त्याशाप्रदर्शकत्वेनोपनिबन्धनीयानि । एषां च मध्येऽभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यम् । इतरेषां यथासंभवं प्रयोग इति साङ्गो गर्भसंधिरुक्तः ।

अथावमर्शः—

**क्रोधेनावमृशेद्यत्र व्यसनाद्वा विलोभनात् ।**
**गर्भनिर्भिन्नबीजार्थः सोऽवमर्शोऽङ्गसंग्रहः ॥ ४३ ॥**

अवमर्शनमवमर्शः पर्यालोचनम् । तच्च क्रोधेन वा व्यसनाद्वा विलोभनेन वा भवितव्यम् । अनेनार्थेनेत्यवधारितैकान्तफलप्राप्त्यवसायात्मा गर्भसंध्युद्भिन्नबीजार्थसंबन्धो विमर्शोऽवमर्शः । यथा रत्नावल्यां चतुर्थेऽङ्के ( पृ० १८६ ) अग्निविद्रवपर्यन्तो वासवदत्ताप्रसक्त्या निरपायरत्नावलीप्राप्त्यवसायात्मा विमर्शो दर्शितः ।

यथा च वेणीसंहारे ( ६।१ ) दुर्योधनरुधिराक्तभीमसेनागमपर्यन्तः—

'तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्येऽपि याते दिवम् ।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः ॥'

इत्यत्र 'स्वल्पावशेषे जये' इत्यादिभिर्विजयप्रत्यर्थिसमस्तभीष्मादिमहारथिवधादवधारितैकान्तविजयावमर्शनादवमर्शनं दर्शितमित्यवमर्शसंधिः ।

तस्याङ्गसंग्रहमाह—

**तत्रापवादसंफेटौ विद्रवद्रवशक्तयः ।**
**द्युतिः प्रसङ्गश्छलनं व्यवसायो विरोधनम् ॥ ४४ ॥**
**प्ररोचना विचलनमादानं च त्रयोदश ।**

यथोद्देशं लक्षणमाह—

**दोषप्रख्याऽपवादः स्यात्**

यथा रत्नावल्याम् ( पृ० १५३ )—'**सुसङ्गता**—[२]सा खु तवस्सिणी भट्टिणीए उज्जइणिं णीअदित्ति पवादं करिअ उवत्थिदे अद्धरत्ते ण जाणीअदि कहिंपि णीदेत्ति । **विदूषकः**—( सोद्वेगम् ) [३]अदिणिग्घिणं क्खु किदं देवीए ।' पुनः । ( पृ० १६२ ) '[४]भो वअस्स, मा खु अण्णधा संभावेहि । सा खु देवीए उज्जइणीए पेसिदा । अदो अप्पिअं त्ति कहिदं । **राजा**—अहो निरनुरोधा मयि देवी ।' इत्यनेन वासवदत्तादोषप्रख्यापनादपवादः ।

---

१ 'सोऽवमर्श इति स्मृतः' इति पाठः. २ 'सा खलु तपस्विनी भट्टिन्योज्जयिनीं नीयत इति प्रवादं कृत्वोपस्थितेऽर्धरात्रे न ज्ञायते कुत्रापि नीतेति ।' इति च्छाया. ३ 'अतिनिर्घृणं खलु कृतं देव्या ।' इति च्छाया. ४ 'भो वयस्य, मा खल्वन्यथा संभावय । सा खलु देव्योज्जयिन्यां प्रेषिता । अतोऽप्रियमिति कथितम् ।' इति च्छाया.

यथा च वेणीसंहारे (पृ० १५७)—'**युधिष्ठिरः**—पाञ्चालक, कच्चिदासादिता तस्य दुरात्मनः कौरवापसदस्य पदवी? **पाञ्चालकः**—न केवलं पदवी। स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः।' इति दुर्योधनस्य दोषप्रख्यापनादपवाद इति।

अथ **संफेटः**—

**संफेटो रोषभाषणम्।**

यथा वेणीसंहारे (पृ० १६५)—'भो कौरवराज, कृतं बन्धुनाशदर्शनमन्युना। मैवं विषादं कृथाः। पर्याप्ताः पाण्डवाः समरायाहमसहाय इति।

पञ्चानां मन्यसेऽस्माकं यं सुयोधं सुयोधन।
दंशितस्यात्तशस्त्रस्य तेन तेऽस्तु रणोत्सवः॥ (६।१०)

इत्थं श्रुत्वाऽसूयात्मिकां निक्षिप्य कुमारयोर्दृष्टिमुक्तवान्धार्तराष्ट्रः—

कर्णदुःशासनवधात्तुल्यावेव युवां मम।
अप्रियोऽपि प्रियो योद्धुं त्वमेव प्रियसाहसः॥ (६।११)

इत्युत्थाय च परस्परक्रोधाधिक्षेपपरुषवाक्कलहप्रस्तावितघोरसंग्रामौ—' इत्यनेन भीमदुर्योधनयोरन्योन्यरोषसंभाषणाद्विजयबीजान्वयेन संफेट इति।

अथ **विद्रवः**—

**विद्रवो वधबन्धादिर्**

यथा छलितरामे—

'येनावृत्य मुखानि साम पठतामत्यन्तमायासितं
बाल्ये येन हृताक्षसूत्रवलयप्रत्यर्पणैः क्रीडितम्।
युष्माकं हृदयं स एष विशिखैरापूरितांसस्थलो
मूर्च्छाघोरतमःप्रवेशविवशो बद्ध्वा लवो नीयते॥'

यथा च रत्नावल्याम् (४।१४)—

'हर्म्याणां हेमशृङ्गश्रियमिव शिखरैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितोऽन्तःपुरेऽग्निः॥'

इत्यादि। पुनः (पृ० १८४) '**वासवदत्ता**—अज्जउत्त, ण क्खु अहं अत्तणो कारणादो भणामि। एसा मए णिग्घिणहिअआए संजदा सागरिआ विवज्जदि।'[१] इत्यनेन सागरिकावधबन्धाग्निभिर्विद्रव इति।

अथ **द्रवः**—

**द्रवो गुरुतिरस्कृतिः॥ ४५॥**

---

१ 'आर्यपुत्र, न खल्वहमात्मनः कारणाद्भणामि। एषा मया निर्घृणहृदयया संयता सागरिका विपद्यते।' इति च्छाया।

यथोत्तरचरिते ( ५।३४ )—

'वृद्धास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्तते
सुन्दस्त्रीदमनेऽप्यखण्डयशसो लोके महान्तो हि ते ।
यानि त्रीण्यकुतोमुखान्यपि पदान्यासन्खरायोधने
यद्वा कौशलमिन्द्रसूनुदमने तत्राप्यभिज्ञो जनः ॥'

इत्यनेन लवो रामस्य गुरोस्तिरस्कारं कृतवानिति द्रवः ।

यथा च वेणीसंहारे (६।२०)—'**युधिष्ठिरः**—भगवन् कृष्णाग्रज सुभद्राभ्रातः,

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विगुणो मन्दभाग्ये मयीत्थम् ॥'

इत्यादिना बलभद्रं गुरुं युधिष्ठिरस्तिरस्कृतवानिति द्रवः ।

अथ **शक्तिः**—

**विरोधशमनं शक्तिस्**

यथा रत्नावल्याम् ( ४।१ )—'**राजा**—

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः ।
प्रत्यासत्तिमुपागता न हि तथा देवी रुदत्या यथा
प्रक्षाल्येव तयैव बाष्पसलिलैः कोपोऽपनीतः स्वयम् ॥'

इत्यनेन सागरिकालाभविरोधिवासवदत्ताकोपोपशमनात् शक्तिः ।

यथा चोत्तरचरिते ( ६।११ ) लवः प्राह—

'विरोधो विश्रान्तः प्रसरति रसो निर्वृतिघन-
स्तदौद्धत्यं क्वापि व्रजति विनयः प्रह्वयति माम् ।
झटित्यस्मिन्दृष्टे किमपि परवानस्मि यदि वा
महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥'

अथ **द्युतिः**—

**तर्जनोद्वेजने द्युतिः ।**

यथा वेणीसंहारे ( पृ० १६१ )—'एतच्च वचनमुपश्रुत्य रामानुजस्य सकलनिकुञ्ज-पूरिताशातिरिक्तमुत्क्रान्तसलिलचरशतसंकुलं त्रासोद्वृत्तनक्रग्राहमालोड्य सरःसलिलं भैरवं च गर्जित्वा कुमारवृकोदरेणाभिहितम्,—

जन्मेन्दोरमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुराक्षीबं रिपुं भाषसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
मत्त्रासान्नृपशो विहाय समरं पङ्केऽधुना लीयसे ॥' ( ६।७ )

इत्यादिना 'त्यक्तोत्थितः सरभसम्' इत्यनेन दुर्वचनजलावलोडनाभ्यां दुर्योधनतर्जनोद्वेजनकारिभ्यां पाण्डवविजयानुकूलदुर्योधनोत्थापनहेतुभ्यां भीमस्य द्युतिरुक्ता ।

अथ **प्रसङ्गः**—

**गुरुकीर्तनं प्रसङ्गश्च**

यथा रत्नावल्याम् (पृ० १८०)—'देव, यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती प्रतिदत्ता ।' इत्यनेन रत्नावल्या लाभानुकूलाभिजनप्रकाशिना प्रसङ्गाद्गुरुकीर्तनेन प्रसङ्गः ।

तथा मृच्छकटिकायाम् ( पृ० २२९ )—'**चाण्डालकः**—[1]एस सागलदत्तस्स सुओ अज्जविणअदत्तस्स णत्तू चारुदत्तो वावादिदुं वज्झट्ठाणं णीअदि । एदेण किल गणिआ वसंतसेणा सुवण्णलोभेण वावादिदत्ति । **चारुदत्तः**—

मखशतपरिपूतं गोत्रमुद्भासितं यत्सदसि निबिडचैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्तमानस्य पापैस्तदसदृशमनुष्यैर्घुष्यते घोषणायाम् ॥'

( मृच्छ० १०।१२ )

इत्यनेन चारुदत्तवधाभ्युदयानुकूलं प्रसङ्गाद्गुरुकीर्तनमिति प्रसङ्गः ।

अथ **छलनम्**—

**छलनं चावमाननम् ॥ ४६ ॥**

यथा रत्नावल्याम् ( पृ० १६२ )—'**राजा**—अहो निरनुरोधा मयि देवी ।' इत्यनेन वासवदत्तयेष्टासंपादनाद्वत्सराजस्यावमाननात् छलनम् ।

यथा च रामाभ्युदये सीतायाः परित्यागेनावमाननात् छलनमिति ।

अथ **व्यवसायः**—

**व्यवसायः स्वशक्त्युक्तिः**

यथा रत्नावल्याम् ( ४।८ )—'**ऐन्द्रजालिकः**—

[2]किं धरणीए मिअंको आआसे महिहरो जले जलणो ।
मज्झण्हंमि पओसो दाविज्जउ जेहि आणत्तिं ॥

अहवा किं बहुणा जंपिएण,—

मज्झ पइण्णा एसा भणामि हिअएण जं महसि दट्ठुं ।
तं ते दावेमि फुडं गुरुणो मंतप्पहावेण ॥' (( रत्ना० ४।९ )

इत्यनेनैन्द्रजालिको मिथ्याग्निसंभ्रमोत्थापनेन वत्सराजस्य हृदयस्थसागरिकादर्शनानुकूलां स्वशक्तिमाविष्कृतवान् ।

---

१ 'एष सागरदत्तस्य सुत आर्यविनयदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते । एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति ।' इति च्छाया. २ 'किं धरण्यां मृगाङ्क आकाशे महीधरो जले ज्वलनः । मध्याह्ने प्रदोषो दर्श्यतां देह्याज्ञप्तिम् ॥ अथवा किं बहुना जल्पितेन । मम प्रतिज्ञैषा भणामि हृदयेन यद्वाञ्छसि द्रष्टुम् । तत्ते दर्शयामि स्फुटं गुरोर्मन्त्रप्रभावेण ॥' इति च्छाया.

यथा च वेणीसंहारे ( ६।६ )—

'नूनं तेनाद्य वीरेण प्रतिज्ञाभङ्गभीरुणा ।
बध्यते केशपाशस्ते स चास्याकर्षणे क्षमः ॥'

इत्यनेन युधिष्ठिरः स्वदण्डशक्तिमाविष्करोति ।

अथ **विरोधनम्**—

**[1]संरब्धानां विरोधनम् ।**

यथा वेणीसंहारे—( पृ० १४७ ) '**राजा**—रे रे मरुत्तनय, किमेवं वृद्धस्य राज्ञः पुरतो निन्दितव्यमात्मकर्म श्लाघसे ? अपि च,—

कृष्टा केशेषु भार्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा
प्रत्यक्षं भूपतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
अस्मिन्वैरानुबन्धे तव किमपकृतं तैर्हता ये नरेन्द्रा
बाह्वोर्वीर्यातिसारद्रविणगुरुमदं मामजित्वैव दर्पः ॥ ( वे० सं० ५।३० )

( भीमः क्रोधं नाटयति । ) **अर्जुनः**—आर्य, प्रसीद । किमत्र क्रोधेन ।

अप्रियाणि करोत्येष वाचा शक्तो न कर्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा ॥ ( वे० सं० ५।३१ )

**भीमः**—अरे भरतकुलकलङ्क,—

[2]अद्यैव किं न विसृजेयमहं भवन्तं दुःशासनानुगमनाय कटुप्रलापिन् ।
विघ्नं गुरू न कुरुतो यदि मत्कराग्रनिर्भिद्यमानरणितास्थनि ते शरीरे ॥
( वे० सं० ५।३२ )

अन्यच्च मूढ,—

शोकं स्त्रीवन्नयनसलिलैर्यत्परित्याजितोऽसि
भ्रातुर्वक्षःस्थलविदलने यच्च साक्षीकृतोऽसि ।
आसीदेतत्तव कुनृपतेः कारणं जीवितस्य
क्रुद्धे युष्मत्कुलकमलिनीकुञ्जरे भीमसेने ॥ ( वे० सं० ५।३३ )

**राजा**—दुरात्मन् भरतकुलापसद पाण्डवपशो, नाहं भवानिव विकत्थनाप्रगल्भः । किंतु,—

द्रक्ष्यन्ति न चिरात्सुप्तं बान्धवास्त्वां रणाङ्गणे ।
मद्गदाभिन्नवक्षोऽस्थिवेणिकाभङ्गभीषणम् ॥' ( वे० सं० ५।३४ )

इत्यादिना संरब्धयोर्भीमदुर्योधनयोः स्वशक्त्युक्तिर्विरोधनमिति ।

अथ **प्ररोचना**—

**सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना ॥ ४७ ॥**

यथा वेणीसंहारे ( पृ० १६५ )—'**पाञ्चालकः**—अहं च देवेन चक्रपाणिना' इत्युपक्रम्य 'कृतं संदेहेन,—

---

१ 'संरम्भोक्तिः' इति पाठः. २ 'अत्रैव' इति पाठः.

पूर्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णात्यन्तचिरोज्झिते च कबरीबन्धे करोतु क्षणम् ।
रामे शातकुठारभासुरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः ॥

(वे० सं० ६।१२)

इत्यादिना 'मङ्गलानि कर्तुमाज्ञापयति देवो युधिष्ठिरः ।' (पृ० १६७) इत्यन्तेन द्रौपदीकेशसंयमनयुधिष्ठिरराज्याभिषेकयोर्भाविनोरपि सिद्धत्वेन दर्शिका प्ररोचनेति ।

अथ **विचलनम्**—

**विकत्थना विचलनम्**

यथा वेणीसंहारे (५।२७)—'**भीमः**—तात, अम्ब,—

सकलरिपुजयाशा यत्र बद्धा सुतैस्ते तृणमिव परिभूतो यस्य गर्वेण लोकः ।
रणशिरसि निहन्ता तस्य राधासुतस्य प्रणमति पितरौ वां मध्यमः पाण्डवोऽयम् ॥

अपि च । तात,—

चूर्णिताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता सुयोधनस्योर्वोर्भीमोऽयं शिरसाञ्चति ॥' (वे० सं० ५।२८)

इत्यनेन विजयबीजानुगतस्वगुणाविष्करणाद्विचलनमिति ।

यथा च रत्नावल्याम् (४।१९)—'**यौगंधरायणः**—

देव्या मद्वचनाद्यथाभ्युपगतः पत्युर्वियोगस्तदा
सा देवस्य कलत्रसंघटनया दुःखं मया स्थापिता ।
तस्याः प्रीतिमयं करिष्यति जगत्स्वामित्वलाभः प्रभोः
सत्यं दर्शयितुं तथापि वदनं शक्नोमि नो लज्जया ॥'

इत्यनेनान्यपरेणापि यौगंधरायणेन मया जगत्स्वामित्वानुबन्धी कन्यालाभो वत्सराजस्य कृतः । इति स्वगुणानुकीर्तनाद्विचलनमिति ।

अथादानम्—

**आदानं कार्यसंग्रहः ।**

यथा वेणीसंहारे—'**भीमः**—ननु भोः समन्तपञ्चकसंचारिणः,—

रक्षो नाहं न भूतं रिपुरुधिरजलाप्लाविताङ्गः प्रकामं
निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि ।
भो भो राजन्यवीराः समरशिखिशिखादग्धशेषाः कृतं व-
स्त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत् ॥' (वे० सं० ६।३७)

इत्यनेन समस्तरिपुवधकार्यस्य संगृहीतत्वादादानम् ।

यथा च रत्नावल्याम् (पृ० १८७)—'**सागरिका**—(दिशोऽवलोक्य ।) दिट्ठिआ[1] समंतादो पज्जलिदो भअवं हुअवहो, अज्ज करिस्सदि दुक्खावसाणं ।' इत्य-

---

१ 'दिष्ट्या समन्तात्प्रज्वलितो भगवान्हुतवहोऽद्य करिष्यति दुःखावसानम् ।' इति च्छाया।

